# अनुक्रमणिका

पृष्ठ संख्या

# अमोघ शिवकवचम्

यह अमोघ शिव कवच परम गोपनीय, समस्त पापों को दूर करने वाला, सारे अमंगलों को, विघ्न-बाधाओं को नष्ट करने वाला, परमपवित्र, जय प्रदायक और समस्त विपत्तियों का नाश करने वाला माना गया है। यह परम हितकारी है और समस्त भयों को दूर करता है। इस कवच के प्रभाव से क्षीणायु, मृत्यु के मुख में पहुंचा हुआ रोगी मनुष्य भी शीघ्र निरोगता को प्राप्त करता है और उसकी दीर्घायु हो जाती है। आर्थिक रूप से पीड़ित मनुष्य की सारी दरिद्रता दूर हो जाती है और उसको सुख-वैभव की प्राप्ति होती है। पापी महापातक से छूट जाता है और इसको भक्ति-श्रद्धा पूर्वक धारण करने वाला निष्काम पुरुष मृत्यु के बाद दुर्लभ मोक्षपद को प्राप्त होता है।

महर्षि ऋषभ ने इसका उपदेश करके एक संकटग्रस्त राजा को दुःख मुक्त किया था। यह कवच श्रीस्कन्दपुराण के ब्रह्मोत्तर खण्ड में है।

पहले विनियोग छोड़कर ऋष्यादिन्यास, करन्यास और हृदयादि अङ्गन्यास करके भगवान् शंकर का ध्यान करें। (इसके

पश्चात् कवच का पाठ करें।)

**अस्य श्रीशिवकवचस्तोत्रमन्त्रस्य ब्रह्मा ऋषिः, अनुष्टुप् छन्दः, श्रीसदाशिवरुद्रो देवता, ह्रीं शक्तिः, वं कीलकम्, श्रीं ह्रीं क्लीं बीजम् सदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः।**

## ऋष्यादिन्यासः

**ॐ ब्रह्मऋष्ये नमः, शिरसि।**
**अनुष्टुप् छन्दसे नमः, मुखे।**
**श्रीसदाशिवरुद्रदेवतायै नमः, हृदि।**
**ह्रीं शक्तये नमः, पादयोः।**
**वं कीलकात नमः, नाभौ।**
**श्रीं ह्रीं क्लीमिति बीजाय नमः, गुह्ये।**
**विनियोगाय नमः, सर्वांगे।**

## अथ करन्यासः

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ ह्रीं रां सर्वशक्तिधाम्ने ईशानात्मने अंगुष्ठाभ्यां नमः।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ नं रीं नित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्जनीभ्यां स्वाहा।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ मं रूं अनादिशक्तिधाम्ने अघोरात्मने मध्यमाभ्यां वषट्।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ शिं रैं स्वतन्त्रशक्तिधाम्ने वामदेवात्मने अनामिकाभ्यां हुम्।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ वां रौं अलुप्तशक्तिधाम्ने सद्योजातात्मने कनिष्ठिकाभ्यां वौषट्।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ यं रः अनादिशक्तिधाम्ने सर्वात्मने करतलकरपृष्ठाभ्यां फट्।

## हृदयाद्यंगन्यासः

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ ह्रीं रां सर्वशक्तिधाम्ने ईशानात्मने हृदयाय नमः।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ नं रीं नित्यतृप्तिधाम्ने तत्पुरुषात्मने शिरसे स्वाहा।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ मं रूं अनादिशक्तिधाम्ने अघोरात्मने शिखायै वषट्।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ शिं रैं स्वतन्त्रशक्तिधाम्ने वामदेवात्मने कवचाय हुम्।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ वां रौं

अलुप्तशक्तिधाम्ने सद्योजातात्मने नेत्रत्रयाय वौषट्।

ॐ नमो भगवते ज्वलज्जवालामालिने ॐ यं रः अनादिशक्तिधाम्ने सर्वात्मने अस्त्राय फट्।

## अथ ध्यानम्

वज्रदंष्ट्रं त्रिनयनं कालकण्ठमरिंदमम्।
सहस्त्रकरमप्युग्रं वन्दे शम्भुमुमापतिम्॥

जिनकी दाढ़ें वज्र के समान हैं, जो तीन नेत्र धारण करते हैं, जिनके कंठ में हलाहल (विष) पान का नील चिन्ह सुशोभित होता है, जो शत्रुभाव रखने वालों का दमन करते हैं, जिनके सहस्रों कर (हजारों हाथ अथवा किरणें) हैं तथा जो अभक्तों (पापियों) के लिए अत्यन्त उग्र हैं, उन उमापति शम्भु को मैं प्रणाम करता हूं।

## ऋषभ उवाच:

अथापरं सर्वपुराणगुह्यं
नि:शेषपापौघहरं पवित्रम्।
जयप्रदं सर्वविपद्विमोचनं
वक्ष्यामिश्विं कवचं हिताय ते॥

**नमस्कृत्य महादेवं विश्वव्यापिनमीश्वरम्।**
**वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम्॥१॥**

**ऋषभ जी कहते हैं**- जो सारे पुराणों में परम गोपनीय कहा गया है, समस्त पापों को दूर करने वाला है, पवित्र, जयप्रदायक तथा समस्त विपत्तियों से मुक्ति दिलवाने वाला है, उस सर्वश्रेष्ठ शिव कवच का मैं तुम्हारे हित (भलाई) के लिए उपदेश करूंगा।

मैं विश्वव्यापी भगवान् महादेव जी को नमस्कार करके मनुष्यों की सब प्रकार से रक्षा करने वाले इस शिवस्वरूप कवच का (मैं) वर्णन करता हूं।

**शुचौ देशे समासीनो यथावत्कल्पितासनः।**
**जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम्।२।**

शुद्ध व पवित्र स्थान में यथायोग्य आसन बिछाकर बैठे, समस्त इन्द्रियों को अपने नियंत्रण में करके, प्राणायाम पूर्वक अविनाशी भगवान् शिव का ध्यान करे।

**हृत्पुण्डरीकांतरसंनिविष्टं**
**स्वतेजसा व्याप्तनभोऽऽकाशम्।**

**अतीन्द्रियं सूक्ष्ममनन्तमाद्यं**

**ध्यायेत् परमानंदमयं महेशम्।३।**

परमानन्दमय भगवान् महेश्वर हृदय-कमल के अंदर की कर्णिका में विराजमान हैं, उन्होंने अपने तेज से आकाशमण्डल को व्याप्त कर रखा है। वे इन्द्रियातीत, सूक्ष्म, अनन्त एवं सबके आदि कारण हैं। इस तरह से जानकर हम उनका ध्यान करें।

**ध्यानावधूताखिलकर्मबन्ध-**

**श्चिरं चिदानंदनिमग्नचेताः।**

**षडक्षरन्याससमाहितात्मा**

**शैवेन कुर्यात् कवचेन रक्षाम्।४।**

इस प्रकार ध्यान के द्वारा समस्त कर्मबंधनों को नष्ट करके चिदानन्दमय भगवान् सदाशिव में अपने मन को चिरकाल तक लगाये रहे। फिर षडक्षरन्यास के द्वारा अपने मन को एकाग्र करके मनुष्य निम्न शिवकवच के द्वारा अपनी रक्षा करे।

**मां पातु देवोऽखिलदेवतात्मा**

**संसारकूपे पतितं गभीरे।**

**तन्नाम दिव्यं वरमन्त्रमूलं**

धुनोतु मे सर्वमद्यं हृदिस्थम्।५।

सर्व देवमय महादेव जी इस गहरे संसार कूप में गिरे हुए मुझ असहाय की आप रक्षा करें। आपका दिव्य नाम जो आपके श्रेष्ठ मंत्र का मूल है मेरे हृदय में स्थित समस्त पापों का नाश करे।

**सर्वत्र मां रक्षतु विश्वमूर्ति-**
**ज्योतिर्मयानन्दघनश्चिदात्मा।**
**अणोरणीयानुरुशक्तिरेक:**
**स ईश्वर: पातु भयादशेषात्।६।**

समस्त विश्व जिनकी मूर्ति है, जो ज्योतिर्मय आनन्दघनस्वरूप चिदात्मा हैं, वे भगवान मेरी सर्वत्र रक्षा करें। जो सूक्ष्म से भी अत्यन्त सूक्ष्म हैं, महान् शक्ति से सम्पन्न हैं, वे अद्वितीय 'ईश्वर' महादेवजी समस्त भ.यों से मेरी रक्षा करें।

**यो भूस्वरूपेण बिभर्ति विश्वं**
**पायात् स भूमेर्गिरिशोऽष्टमूर्ति:।**
**योऽपां स्वरूपेण नृणां करोति**
**संजीवनं सोऽवतु मां जलेभ्य:।७।**

जिन्होंने पृथ्वी रूप से इस विश्व को धारण कर रखा है, वे अष्टमूर्ति 'गिरिश' पृथ्वी से मेरी रक्षा करें। जो जलरूप से जीवों को जीवन दान दे रहे हैं, वे 'शिव' जल से मेरी रक्षा करें।

**कल्पावसाने भुवनानि दग्ध्वा**
**सर्वाणि यो नृत्यति भूरिलीलः।**
**स कालरुद्रोऽवतु मां दवाग्ने-**
**र्वात्यादिभीतेऽखिलाच्च तापात्।८।**

जो विशद लीलाबिहारी 'शिव' कल्प के अंत में समस्त भुवनों को दग्ध करके (आनन्द से) नृत्य करते हैं, वे 'कालरुद्र' भगवान् दावानल से, आंधी-तूफान के भय से और समस्त तापों दु:खों से मेरी रक्षा करें।

**प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः।**
**चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्त्रम्।९।**

प्रदीप्त विद्युत एवं स्वर्ण के सदृश ज़िनकी कान्ति है, विद्या, वर और अभय (मुद्राएं) तथा कुल्हाड़ी जिनके कर-कमलों में सुशोभित है, जो चार मुखों एवं तीन नेत्रों वाले हैं, वे भगवान् 'तत्पुरुष' पूर्व दिशा में निरन्तर मेरी रक्षा करें।

कुठारवेदांकुशपाशशूल-

कपालढक्काक्षगुणान् दधानः।

चतुर्मुखो नीलरुचिस्त्रिनेत्रः

पायादघोरो दिशि दक्षिणस्याम्॥१०॥

जिन्होंने अपने हाथों में कुल्हाड़ी, वेद, अंकुश, फंदा, त्रिशूल, कपाल, डमरू और रुद्राक्ष की माला को धारण कर रखा है तथा जो चतुर्मुख हैं, वे नीलकांति, त्रिनेत्र धारी भगवान् अघोर दक्षिण दिशा में मेरी रक्षा करें।

कुन्देन्दुशंखस्फटिकावभासो

वेदाक्षमालावरदाभयांकः।

त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः

सद्योऽधिजातोऽवतु मां प्रतीच्याम्॥११॥

कुन्द, चन्द्रमा, शंख और स्फटिक के समान जिनकी उज्ज्वल कांति है, वेद, रुद्राक्षमाला, वरद और अभय (मुद्राओं) से जो सुशोभित हैं, वे महाप्रभावशाली चतुरानन एवं त्रिलोचन भगवान् 'सद्योजात' पश्चिम दिशा में मेरी रक्षा करें।

**वराक्षमालाभ्यटङ्कहस्तः सरोजकिञ्जल्कसमानवर्णः ।**
**त्रिलोचनश्चात्रचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः॥१२॥**

जिनके हाथों में वर एवं अभय (मुद्राएं), रुद्राक्षमाला और टांकी विराजमान हैं तथा कमल-किञ्जल्क के समान जिनका गौर वर्ण है, वे सुन्दर चार मुखवाले त्रिनेत्रधारी भगवान् 'वामदेव' उत्तर दिशा में मेरी रक्षा करें।

**वेदाभयेष्टांकुशपाशटङ्क-**
**कपालढक्काक्षकशूलपाणिः।**
**सितद्युतिः पञ्चमुखोऽवतान्मा-**
**मीशान ऊर्ध्वं परमप्रकाशः॥१३॥**

जिनके कर-कमलों में वेद, अभय और वर (मुद्राएं), अंकुश, टांकी, फन्दा, कपाल, डमरू, रुद्राक्षमाला और त्रिशूल सुशोभित हैं, जो अत्यन्त श्वेत आभा से युक्त हैं, वे परम प्रकाश रूप पञ्चमुख भगवान् 'ईशान' मेरी ऊपर से रक्षा करें।

**मूर्द्धानमव्यान्मम चन्द्रमौलिर्भालं ममाव्यादथ भालनेत्रः।**
**नेत्रे ममाव्याद् भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः॥१४॥**

भगवान् 'चन्द्रमौलि' मेरे सिरकी, 'भालनेत्र' मेरे ललाट

की, 'भगनेत्रहरी' मेरे नेत्रों की और 'विश्वनाथ' मेरी नासिका की सदैव रक्षा करें।

**पायाच्छ्रुती मे श्रुतिगीतकीर्तिः**
**कपोलमव्यात् सततं कपाली।**
**वक्त्रं सदा रक्षतु पञ्चवक्त्रो**
**जिह्वां सदा रक्षतु वेदजिह्वः॥१५॥**

'श्रुतिगीतकीर्ति' मेरे कानों की, 'कपाली' निरन्तर मेरे कपोलों की, 'पञ्चमुख' मुख की तथा 'वेदजिह्व' जीभ की रक्षा करें।

**कण्ठं गिरिशोऽवतु नीलकण्ठः**
**पाणिद्वयं पातु पिनाकपाणिः।**
**दोर्मूलमव्यान्मम धर्मबाहु-**
**र्वक्षःस्थलं दक्षमखान्तकोऽव्यात्॥१६॥**

नीलवर्ण के कण्ठ की शोभावाले भगवान् 'गिरिश' मेरे गले की, 'पिनाकपाणि' मेरे दोनों हाथों की, 'धर्मबाहु' दोनों कन्धों की तथा 'दक्षयज्ञविध्वंसी' मेरे वक्षःस्थल की रक्षा करें।

**ममोदरं पातु गिरीन्द्रधन्वा**

**मध्यं ममाव्यान्मदनान्तकारी।**

**हेरम्बतातो मम पातु नाभिं**

**पायात् कटी धूर्जटिरीश्वरो मे॥१७॥**

'गिरीन्द्रधन्वा' मेरे पेट की, 'कामदेव के नाशक' भगवान् 'शिव' मेरे मध्य प्रदेश की, 'गणेश जी के पिता' मेरी नाभि की तथा 'धूर्जटिरीश्वर' (सिर पर जटा धारण करने वाले ईश्वर) मेरी कटि की रक्षा करें।

**ऊरुद्वयं पातु कुबेरमित्रो**

**जानुद्वयं मे जगदीश्वरोऽव्यात्।**

**जङ्घायुगं पुङ्गवकेतुरव्यात्**

**पादौ ममाव्यात् सुवन्द्यपाद:॥१८॥**

'कुबेरमित्र' मेरी दोनों जांघों की, 'जगदीश्वर' दोनों घुटनों की, 'पुङ्गवकेतु' दोनों पिंडलियों की और 'सुखवन्द्यपाद' (जिनके चरणों की देवता वन्दना करते हैं) मेरे पैरों की सदैव रक्षा करें।

**महेश्वर: पातु दिनादियामे**

**मां मध्यमामेऽवतु वामदेव:।**

त्रयम्बकः पातु तृतीययामे

वृषभध्वजः पातु दिनान्त्ययामे॥१९॥

'महेश्वर' दिन के पहले पहर में मेरी रक्षा करें, 'वामदेव' मध्य पहर में मेरी रक्षा करें, 'त्र्यम्बक' तीसरे पहर में और 'वृषभध्वज' (वृषचिन्ह है ध्वजा में जिनके ऐसे) दिन के अंतिम पहर में मेरी रक्षा करें।

पायान्निशादौ शशिशेखरो मां गङ्गाधरो रक्षतु मां निशीथे ।
गौरापतिः पातु निशावसाने मृत्युञ्जयो रक्षतु सर्वकालम्॥२०॥

'शशिशेखर' रात्रि के आरम्भ में, 'गंगाधर' अर्धरात्रि में, 'गौरापति' रात्रि के अंत में और 'मृत्युंजय' सर्वकाल में मेरी रक्षा करें।

अन्तःस्थितं रक्षतु शङ्करो मां

स्थाणुः सदा पातु बहिःस्थितं माम्।

तदन्तरे पातु पतिः पशूनां

सदाशिवो रक्षतु मां समन्तात्॥२१॥

'शंकर' घर के भीतर रहने पर मेरी रक्षा करें। 'स्थाणु' बाहर रहने पर मेरी रक्षा करें। 'पशुपति' बीच में मेरी रक्षा करें

और 'सदाशिव' सब ओर से मेरी रक्षा करें।

**तिष्ठन्तमव्याद्भुवनैकनाथ: पायाद् व्रजन्तं प्रमथाधिनाथ: ।**
**वेदांतवेद्योऽवतु मां निषण्णं मामव्यय: पातु शिव: शयानम्॥२२॥**

'भुवनैकनाथ' खड़े रहने के समय, 'प्रमथाधिनाथ' चलते समय, 'वेदान्तवेद्य' बैठे रहने के समय और 'अविनाशी शिव' सोते समय मेरी रक्षा करें।

**मार्गेषु मां रक्षतु नीलकण्ठ: शैलादिदुर्गेषु पुरत्रयारि:।**
**अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्ति:॥२३॥**

'नीलकण्ठ' गमन-मार्ग पर मेरी रक्षा करें। 'त्रिपुरारि' पहाड़ आदि दुर्गम स्थान पर और उदारशक्ति 'मृगव्याध' वनवासादि महान प्रवासों में मेरी रक्षा करें।

**कल्पान्तकाटोपपटुप्रकोप:**
**स्फुटाट्टहासोच्चलिताण्डकोश:।**
**घोरारिसेनार्णवदुर्निवार-**
**महाभयाद् रक्षतु वीरभद्र:॥२४॥**

जिनका प्रबल क्रोध कल्पों का अन्त करने में अत्यन्त पटु है, जिनके, प्रचण्ड अट्टहास से ब्रह्माण्ड कांप उठता है, वे

'वीरभद्रजी' समुद्र के समान भयानक शत्रुसेना के दुर्निवार महान भय से मेरी रक्षा करें।

**पत्त्यश्वमातंगघटावरूथ-**
**सहस्त्रलक्षायुतकोटिभीषणम्।**
**अक्षौहिणीनां शतमाततायिनां**
**क्षिन्द्यान्मृडो घोरकुठारधारया॥२५॥**

भगवान 'मृड' मुझ पर आततायी रूप से आक्रमण करने वालों की हजारों, दस हजारों, लाखों और करोड़ों पैदलों, घोड़ों और हाथियों से युक्त अति भीषण सैंकड़ों अक्षौहिणी सेनाओं का अपनी घोर कुठार धार से भेदन करें।

**निहन्तु दस्यून् प्रलयानलार्चि-**
**र्ज्वलत् त्रिशूलं त्रिपुरान्तकस्य।**
**शार्दूसिंहर्क्षवृकादिहिंस्त्रान्**
**संत्रासयत्वीशधनुः पिनाकम्॥२६॥**

भगवान् 'त्रिपुरान्तक' का प्रलयाग्नि के समान ज्वालाओं से युक्त जलता हुआ त्रिशूल (मेरे) दस्युदल का विनाश कर दे और उनका पिनाक धनुष, चीता, सिंह, रीछ, भेड़िया आदि

हिंसक जंतुओं का नाश करें।

**दुःखस्वप्नदुश्शकुनदुर्गतिदौर्मनस्य-**
**दुर्भिक्षदुर्व्यसनदुस्सहदुर्यशांसि।**
**उत्पाततापविषभीतिमसद्ग्रहार्ति-**
**व्याधींश्च नाशयतु मे जगतामधीशः॥२७॥**

जगदीश्वर मेरे बुरे स्वप्न, बुरे शकुन, बुरी गति, मन की दुष्ट भावना, दुर्भिक्ष, दुर्व्यसन, दुस्सह अपयश, उत्पात, संताप, विषभय, दुष्ट ग्रहों की पीड़ा तथा समस्त रोगों का नाश करें।

ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सकलतत्वविहाराय सकललोकैककर्त्रे सकललोककैकभर्ते सकललोकैकहर्त्रे सकललोकैकगुरवे सकललोकराक्षिणे सकलनिगमगुह्याय सकलवरप्रदाय सकलदुरितार्त्तिभञ्जनाय सकलजगदभयंकराय सकललोकैकशंकराय शशांकशेखराय शाश्वतनिजाभासाय निर्गुणाय नीरुपमाय नीरूपाय निराभासाय निरामयाय निष्प्रपंचाय निष्कलंकाय निर्द्वन्द्वाय निस्संगाय निर्मलाय निर्गमाय नित्यरूपविभवाय निरुपमविभवाय

निराधाराय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानन्दाद्वयाय परमशान्तप्रकाश तेजोरूपा जय जय महारुद्र महारौद्र भद्रावतार दुःखदावदारण महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वांगखंगचर्मपाशांकुशडमरुशूलचापबाणगदाशक्तिभिन्दिपालतोमरमूसलमुगद्रपट्टिशपरशुपरिघभुशुण्डीशताघ्नीचक्राद्यायुधभीषणकर सहस्त्रमुख दंष्ट्राकराल विकटाट्टहासविसफारितब्रह्माण्डमण्डलनागेन्द्रगुण्डल नागेन्द्रहार नागेन्द्रवलय नागेन्द्रचर्मधर मृत्युञ्जय त्र्यम्बक त्रिपुरान्तक विरूपाक्ष विश्वेश्वर वृषभवाहन विषभूषण विश्वतोमुख सर्वतो रक्ष रक्ष मां ज्वल ज्वल महामृत्युभयमुत्सादयोत्सादयं नाशय नाशय रोगभयमुत्सादयोत्सादय विषसर्पभयं शमय शमय चोरभयं मारय मारय मम शत्रुनुच्चाटयोच्चाटय शूलेन विदारय विदारय कुठारेण भिन्धि भिन्धि खंगेन छिन्धि छिन्धि खट्वांगेन विपोथय विपोथय मूसलेन निष्पेषय निष्पेषय बाणैः संताडय संताडय रक्षांसि भीषय भीषय भूतानि विद्रावय विद्रावय कूष्मांडवेतालमारीगणब्रह्म राक्षसान् संत्रासय संत्रासय ममाभयं कुरु कुरु वित्रस्तं मामाश्वासयाश्वासय नरक

**भयान्मामुद्धारयोद्धारय संजीवय संजीवय क्षुत्तृड्भ्यां ममाप्याययाप्यायय दुःखातुरं मामानन्दयानन्दय शिवकवचेन मामाच्छादयाच्छादय त्र्यम्बक सदाशिव नमस्ते नमस्ते नमस्ते।**

'ॐ' जिनका वाचक है, सम्पूर्ण तत्त्व जिनके स्वरूप हैं, जो सम्पूर्ण तत्त्वों में विचरण करने वाले, समस्त लोकों के एकमात्र कर्त्ता और समस्त विश्व के एकमात्र भरण-पोषण करने वाले हैं, जो अखिल विश्व के एक ही संहारकारी, सब लोकों के एकमात्र गुरु, समस्त संसार के एकमात्र साक्षी, सम्पूर्ण वेदों के गूढ़ तत्त्व, सबको वर देने वाले, समस्त पापों और पीड़ाओं का नाश करने वाले, सारे संसार को अभय देने वाले, समस्त लोकों के एकमात्र कल्याणकारी, चन्द्रमा का मुकुट धारण करने वाले, अपने सनातन-प्रकाश से प्रकाशित होने वाले, निर्गुण, उपमारहित, निराकार, निराभास, निरामय, निष्प्रपञ्च, निष्कलंक, निर्द्वन्द्व, निस्संग, निर्मल, गति-शून्य, नित्यरूप, नित्य वैभव से सम्पन्न, अनुपम ऐश्वर्य से सुशोभित, आधार शून्य, नित्य-शुद्ध-बुद्ध, परिपूर्ण, सच्चिदानन्दघन, अद्वितीय तथा परमशांत, प्रकाशमय, तेजःस्वरूप हैं, उन भगवान सदाशिव को नमस्कार है। हे महारुद्र, महारौद्र, भद्रावतार, दुःख-दावाग्नि विदारण,

महाभैरव, कालभैरव, कलपान्तभैरव, कपालमालाधारी! हे खटवांग, खंग, ढाल, फन्दा, अंकुश, डमरू, त्रिशूल, धनुष, बाण, गदा, शक्ति, भिन्दिपाल, तोमर, मूसल, मुग्दर, पट्टिश, परशु, परिघ, भुशुण्डी शतघ्नी और चक्र आदि आयुधों के द्वारा भयंकर हाथों वाले! हजार मुख और दंष्ट्रा से कराल, विकट अट्टहास से विशाल ब्रह्माण्डमंडल का विस्तार करने वाले, नागेन्द्र वासुकि को कुण्डल, हार, कंकण तथा ढाल के रूप में धारण करने वाले, मृत्युञ्जय, त्रिनेत्र, त्रिपुरनाशक, भयंकर नेत्रों वाले, विश्वेश्वर, विश्वरूप में प्रकट, बैल पर सवारी करने वाले, विष को गले में भूषण रूप में धारण करने वाले तथा सब ओर मुख वाले भगवान् शंकर! आपकी जय हो, जय हो! आप मेरी सब ओर से रक्षा कीजिये। प्रज्ज्वलित होइये प्रज्ज्वलित होइये। मेरे महामृत्युञ्जय भय का तथा अपमृत्यु के भय का नाश कीजिये, नाश कीजिये। बाहर और भीतरी रोग-भय को जड़ से मिटा दीजिये, जड़ से मिटा दीजिये। विष और सर्प के भय को शान्त कीजिये, शान्त कीजिये। चोरभय को मार डालिये, मार डालिये। मेरे (काम, क्रोध, लोभादि भीतरी तथा इन्द्रियों के और शरीर के द्वारा होने वाले पापकर्मरूपी बाहरी) शत्रुओं का उच्चाटन

कीजिये, उच्चाटन कीजिये। त्रिशूल के द्वारा विदारण कीजिये, विदारण कीजिये। कुठार के द्वारा काट डालिये, काट डालिये। खड्ग के द्वारा छेद डालिए, छेद डालिए। खटवाङ्ग के द्वारा नाश कीजिये, नाश कीजिये। मूसल के द्वारा पीस डालिये, पीस डालिये और बाणों के द्वारा बींध डालिए, बींध डालिए। (आप मेरी हिंसा करने वाले) राक्षसों को भय दिखाइये, भय दिखाइये। भूतों को भगा दीजिये, भगा दीजिये। कूष्माण्ड, वेताल, मारियों और ब्रह्मराक्षसों को संत्रस्त कीजिये, संत्रस्त कीजिये। मुझ को अभय दीजिये, अभय दीजिये। मुझे अत्यन्त डरे हुए को आश्वासन दीजिए, आश्वासन दीजिए। नरक भय से मेरा उद्धार कीजिए, उद्धार कीजिए। मुझे जीवनदान दीजिए, जीवनदान दीजिए। क्षुधा-तृष्णा का निवारण करके मुझको आप्यायित कीजिए, आप्यायित कीजिए। आपकी जय हो, जय हो। मुझ दुःखातुर को आनन्दित कीजिए, आनन्दित कीजिए। शिव कवच से मुझे आच्छादित कीजिए, आच्छादित कीजिए। त्रयम्बक सदाशिव आपको नमस्कार है, नमस्कार है, नमस्कार है।

## ऋषभ उवाच:

इत्येतत्कवचं शैवं वरदं व्याहृतं मया।

**सर्वबाधाप्रशमनं रहस्यं सर्वदेहिनाम्॥२८॥**

**ऋषभ जी कहते हैं**- इस प्रकार यह वरदायक शिव कवच मैंने कहा है। यह समस्त बाधाओं को शान्त करने वाला तथा समस्त देहधारियों के लिए गोपनीय रहस्य है।

**यः सदा धारयेन्मर्त्यः शैवः कवचमुत्तमम्।**
**न तस्य जायते क्वापि भयं शंभोरनुग्रहात्॥२९॥**

जो मनुष्य इस उत्तम शिव कवच को सदा धारण करता है, उसे भगवान शिव के अनुग्रह से कभी भी और कहीं भी भय नहीं होता।

**क्षीणायुर्मृत्युमापन्नौ महारोगहतोऽपि वा।**
**सद्यः सुखमप्राप्नोति दीर्घमायुश्च विन्दति॥३०॥**

जिसकी आयु क्षीण हो चली है, जो मरणासन्न हो गया है अथवा जिसे महान रोगों ने मृतक-सा कर दिया है, वह भी इस कवच के प्रभाव से तत्काल सुखी हो जाता है और दीर्घायु प्राप्त कर लेता है।

**सर्वदारिद्र्यशमनं सौमङ्गल्यविवर्धनम्।**
**यो धत्ते कवचं शैवं स देवैरपि पूज्यते॥३१॥**

शिव कवच समस्त दरिद्रता का शमन करने वाला और सौमांगल्य को बढ़ाने वाला है, जो इसे धारण करता है, वह देवताओं से भी पूजित होता है।

**महापातकसंघातैर्मुच्यते चोपपातकैः।**
**देहान्ते शिवंप्राप्नोति शिववर्मानुभावतः॥३२॥**

इस शिव कवच के प्रभाव से मनुष्य महापातकों के समूहों और उपपातकों से भी छुटकारा पा जाता है तथा शरीर का अन्त होने पर शिव को पा लेता है।

**त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम्।**
**धारयस्व मया दत्तं सद्यः श्रेयो ह्यवात्स्यसि॥३३॥**

वत्स! तुम भी मेरे दिए हुए इस उत्तम शिवकवच को श्रद्धापूर्वक धारण करो, इससे तुम शीघ्र और निश्चय ही कल्याण के भागी होओगे।

॥ इति श्रीस्कन्दमहापुराणे एकाशीतिसहस्त्रयां तृतीये
ब्रह्मोत्तरखण्डे वर्जित अमोघशिवकवचं
सम्पूर्णम॥



# आरती श्री शिवजी की

ॐ जय शिव ओंकारा हर शिव ओंकारा
ब्रह्मा विष्णु सदाशिव अर्द्धांगी धारा॥ ॐ जय....!!
एकानन चतुरानन पंचानन राजे।
हंसानन गरुडासन वृषवाहन साजे॥ ॐ जय....!!
दो भुज चार चतुर्भुज दस भुज ते सोहे।
तीनों रूप निरखता, त्रिभुवन जन मोहे॥ ॐ जय....!!
श्वेताम्बर पीताम्बर बाघाम्बर अंगे।
सनकादिक ब्रह्मादिक भूतादिक संगे॥ ॐ जय....!!
अक्षमाला, वनमाला, मुण्डमाला धारी।
चंदन मृगमद चन्दा, भोले शुभकारी॥ ॐ जय....!!
कर के मध्ये कंमडल, चक्र त्रिशूल धर्ता।
जग करता जग हर्ता जग पालन करता॥ ॐ जय....!!
लक्ष्मी वर सावित्री श्री पार्वती संगे।
अर्द्धांगी गायत्री सिर सोहे गंगे॥ ॐ जय....!!
ब्रह्मा विष्णु सदाशिव, जानत अविवेका।
प्रणवाक्षर के मध्ये, ये तीनों एका॥ ॐ जय....!!
त्रिगुण स्वामी जी की आरती, जो कोई नर गावे।
कहत् शिवानंद स्वामी, मनवांछित फल पावे॥ ॐ जय...!!
ॐ जय शिव ओंकारा, हरि ॐ जय शिव ओंकारा।
ब्रह्मा विष्णु सदाशिव अर्द्धांगी धारा॥ ॐ जय....!!



# श्रीनारायण कवचम्

सबसे पहले भगवान् श्रीगणेश जी तथा भगवान् नारायण को नमस्कार करके निम्न प्रकार से न्यास करें-

## अंगन्यासः

**ॐ ॐ नमः – पादयोः।**

दाहिने हाथ की तर्जनी अंगुली-अंगूठा दोनों को मिलाकर दोनों पैरों का स्पर्श करें।

**ॐ नं नमः – जानुनोः।**

दाहिने हाथ की तर्जनी अंगुली-अंगूठा दोनों को मिलाकर दोनों घुटनों का स्पर्श करें।

**ॐ मों नमः ऊर्वोः।**

दाहिने हाथ की तर्जनी अंगुली-अंगूठा दोनों को मिलाकर दोनों जांघों का स्पर्श करें।

**ॐ नां नमः – उदरे।**

दाहिने हाथ की तर्जनी अंगुली-अंगूठा दोनों को मिलाकर पेट का स्पर्श करें।

**ॐ रां नमः – हृदि।**

दाहिने हाथ की मध्यमा-तर्जनी-अनामिका से हृदय का स्पर्श करें।

**ॐ यं नमः उरसि।**

दाहिने हाथ की मध्यमा-अनामिका-तर्जनी से छाती का स्पर्श करें।

**ॐ णां नमः – मुखे।**

दाहिने हाथ की तर्जनी अंगुली-अंगूठे को मिलाकर मुख का स्पर्श करें।

**ॐ यं नमः – शिरसि।**

दाहिने हाथ की तर्जनी-मध्यमा को मिलाकर सिर का स्पर्श करें।

**करन्यास:**

**ॐ ॐ नमः – दक्षिणतर्जन्याम्।**

दाहिने अंगूठे से दाहिनी तर्जनी के सिरे का स्पर्श करें।

**ॐ नं नमः दक्षिणमध्यमायाम्।**

दाहिने अंगूठे से दाहिने हाथ की मध्यमा अंगुली का ऊपर वाला पोर स्पर्श करें।

**ॐ मों नमः – दक्षिणानामिकायाम्।**

दाहिने अंगूठे से दाहिने हाथ की अनामिका का ऊपर वाला पोर स्पर्श करें।

**ॐ भं नमः – दक्षिणकनिष्ठिकायाम्।**

दाहिने अंगूठे से दाहिने हाथ की कनिष्ठिका का ऊपर वाला पोर स्पर्श करें।

**ॐ गं नमः – वामकनिष्ठिकायाम्।**

बाएं अंगूठे से बाएं हाथ की कनिष्ठिका का ऊपर वाला पोर स्पर्श करें।

**ॐ वं नमः - वामानामिकायाम्।**

बाएं अंगूठे से बाएं हाथ की अनामिका का ऊपर वाला पोर स्पर्श करें ।

**ॐ तें नमः – वाममध्यमायाम्।**

बाएं अंगूठे से बाएं हाथ की मध्यमा अंगुली का ऊपर वाला पोर स्पर्श करें।

**ॐ वां नमः – वामतर्जन्याम्।**

बाएं अंगूठे से बाएं हाथ की तर्जनी अंगुली का ऊपर वाला पोर स्पर्श करें।

**ॐ सुं नमः – दक्षिणांगुष्ठःअधःपर्वणि।**

दाहिने हाथ की चारों अंगुलियों से दाहिने हाथ के अंगूठे का नीचे वाला पोर स्पर्श करें।

**ॐ वां नमः – वामांगुष्ठोर्ध्वपर्वणि।**

बाएं हाथ की चारों अंगुलियों से बाएं हाथ के अंगूठे के ऊपर वाला पोर स्पर्श करें।

**ॐ यं नमः – वामांगुष्ठः अद्यः पर्वणि।**

बाएं हाथ की चारों अंगुलियों से बाएं हाथ के अंगूठे का नीचे वाला पोर स्पर्श करें।

**विष्णुषडक्षरन्यासः**

**ॐ ॐ नमः – हृदये।**

दाएं हाथ की तर्जनी-मध्यमा और अनामिका से हृदय का स्पर्श करें।

**ॐ विं नमः – मूर्धनि।**

दाएं हाथ की तर्जनी-मध्यमा को मिलाकर सिर का स्पर्श करें।

**ॐ षं नमः – भ्रुवोर्मध्ये।**

दाएं हाथ की तर्जनी-मध्यमा से दोनों भौंहों का

स्पर्श करें।

**ॐ णं नमः – शिखायाम्।**

दाएं अंगूठे से शिखा का स्पर्श करें।

**ॐ वें नमः – नेत्रंयोः।**

दाएं हाथ की तर्जनी-मध्यमा से दोनों नेत्रों को स्पर्श करें।

**ॐ नं नमः सर्वसंधिषु।**

दाएं हाथ की तर्जनी-मध्यमा और अनामिका से शरीर के सभी जोड़ों-कंधा, कोहनी, घुटना आदि का स्पर्श करें।

**ॐ मः अस्त्राय फट् – प्राच्याम्।**

पूर्व की ओर चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – आग्नेय्याम्।**

अग्निकोण में चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – दक्षिणस्याम्।**

दक्षिण की ओर चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – नैर्ऋत्ये।**

नैर्ऋत्यकोण में चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – प्रतीच्याम्।**

पश्चिम की ओर चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – वायव्ये।**

वायुकोण में चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – उदीच्याम्।**

उत्तर की ओर चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – ऐशान्याम्।**

ईशानकोण में चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – ऊर्ध्वायाम्।**

ऊपर की ओर चुटकी बजाएं।

**ॐ मः अस्त्राय फट् – अधरायाम्।**

नीचे की ओर चुटकी बजाएं।



श्रीहरिः

# श्रीनारायण कवचम्

**राजोवाचः**

**यया गुप्तः सहस्त्राक्षः सवाहान् रिपुसैनिकान्।**
**क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रयम्॥१॥**
**भगवंस्तन्ममाख्याहि धर्म नारायणात्मकम्।**
**यथाऽऽततायिनः शत्रून येन गुप्तोऽजयन्मृधे॥२॥**

राजा परीक्षित ने पूछा-हे भगवान्! देवराज इन्द्र ने जिस कवच से सुरक्षित होकर शत्रुओं की चतुरंगिनी सेना को खेल-खेल में ही पराजित करके त्रिलोकी की राजलक्ष्मी का उपयोग किया, आप उस नारायण कवच को मुझे सुनाइये और यह भी बतायें कि उन्हांने उससे किस प्रकार सुरक्षित होकर युद्धभूमि में आक्रमणकारी शत्रुओं पर विजय प्राप्त की॥१-२॥

**वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते।**
**नारायणाख्यं वर्माह तदिहैकमनाः शृणु॥३॥**

श्रीशुकदेव जी ने कहा-हे परीक्षित्! जब सभी देवताओं ने विश्वरूप को पुरोहित बना लिया, तब देवराज इन्द्र के पूछने

पर विश्वरूप ने उन्हें दिव्यनारायण कवच का उपदेश किया। तुम एकाग्रचित्त होकर उसका श्रवण करो।।३।।

## विश्वरूप उवाच:

**धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः।**
**कृतस्वांगकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः।।४।।**
**नारायणमयं वर्म संनह्येद् भय आगते।**
**पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि।।५।।**
**मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत्।**
**ॐ नमो नारायणायेति विपर्ययमथापि वा।।६।।**

विश्वरूप ने कहा- हे देवराज इन्द्र! भय का अवसर उपस्थित होने पर नारायण कवच धारण करके सर्वप्रथम अपने शरीर की रक्षा कर लेनी चाहिए। सबसे पहले स्वच्छ जल से हाथ-पैर धोकर आचमन करे फिर हाथ में कुशा की पवित्री धारण करके उत्तर की ओर मुंह करके बैठ जाये। इसके बाद कवच धारण करने तक, कुछ न बोलने का निश्चय करके श्रद्धापूर्वक-'ॐ नमो नारायणाय' और 'ॐ नमो भगवते वासुदेवाय नमः'- इन मंत्रों से हृदयादि,

अंगन्यास तथा अंगुष्ठादि करन्यास करें। पहले 'ॐ नमो नारायणाय' इस अष्टाक्षर मंत्र से 'ॐ' आदि आठ अक्षरों का क्रमश: पैरों, घुटनों, जांघों, पेट, हृदय, वक्ष:स्थल, मुख और सिर में न्यास करे अथवा पूर्वोक्त मंत्र के यकार से लेकर 'ॐकार' पर्यन्त आठ अक्षरों को सिर से आरंभ करके उन्हीं आठ अंगों में विपरीत क्रम से न्यास करें।।४-५-६।।

**करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया।**
**प्रणवादियकारान्तमंगुल्यंगुष्ठपर्वसु ।।७।।**

इसके बाद 'ॐ नमो भगवते वासुदेवाय नम:' इस मंत्र के 'ॐ' आदि बारह अक्षरों का दायीं तर्जनी से बायीं तर्जनी तक दोनों हाथ की आठ अंगुलियों और दोनों अंगूठों की दो-दो गांठों में न्यास करें।।७।।

**न्यसेद्धृदय ओंकारं विकारमनु मूर्धनि।**
**षकारं तु भ्रुवोर्मध्येणकारं शिखया दिशेत्।।८।।**
**वेकारं नेत्रयोर्युञ्जयान्नकारं सर्वसंधिषु।**

**मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भयेद् बुधः॥९॥**
**सविसर्गं फडन्तं तत् सर्वदिक्षु विनिर्दिशेत्।**
**ॐ विष्णवे नमः इति॥१०॥**

फिर 'ॐ विष्णवे नमः' इस मंत्र के पहले अक्षर 'ॐ' का हृदय में, 'वि' का ब्रह्मरन्ध्र में, 'ष' का भौंहों के बीच में, 'ण' का चोटी में, 'वे' का दोनों नेत्रों में और 'न' का शरीर की सब गांठों में न्यास करें। इसके पश्चात् 'ॐ मः अस्त्राय फट्' कहकर दिग्बन्ध करें। इस प्रकार न्यास करने से इस विधि को जानने वाला पुरुष मंत्रस्वरूप हो जाता है॥८-९-१०॥

**आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम्।**
**विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत्॥११॥**

इसके बाद समग्र ऐश्वर्य, धर्म, यश, लक्ष्मी, ज्ञान और वैराग्य से परिपूर्ण इष्टदेव भगवान् का ध्यान करें और अपने को भी इसी रूप में मानकर ही चिन्तन करें। इसके पश्चात विद्या, तेज और तपःस्वरूप इस कवच का पाठ आरंभ करें॥११॥

**ॐ हरिर्विदध्यान्मम सर्वरक्षां**
**न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे।**
**दरारिचर्मासिगदेषुचाप-**
**पाशान् दधानोऽष्टगुणोऽष्टबाहुः॥१२॥**

भगवान् श्रीहरि गरुड़जी की पीठ पर अपने श्री चरण-कमल रखे हुए हैं। अणिमादि आठों सिद्धियां उनकी सेवा कर रही हैं। आठ हाथों में शंख, चक्र, ढाल, तलवार, गदा, बाण, धनुष और पाश (फंदा) धारण किये हुए हैं। वे ही 'ॐकार स्वरूप' प्रभु सब प्रकार से तथा सब ओर से मेरी रक्षा करें।॥१२॥

**जलेषु मां रक्षतु मत्स्यमूर्तिर्या-**
**दोर्गणेभ्यो वरुणस्य पाशात्।**
**स्थलेषु मायावटुवामनोऽव्यात्**
**त्रिविक्रमः खेऽवतु विश्वरूपः॥१३॥**

'मत्स्यमूर्ति' भगवान जल के अन्दर जीव-जन्तुओं से और वरुण के पाश से मेरी रक्षा करें। माया से ब्रह्मचारी का रूप धारण करने वाले 'वामन' भगवान् स्थल पर और

विश्वरूप 'श्री त्रिविक्रम' भगवान् आकाश में मेरी रक्षा करें॥१३॥

**दुर्गेष्वटव्याजिमुखादिषु प्रभुः**
**पायान्नृसिंहोऽसुरयूथपारिः।**
**विमुञ्चतो यस्य महाट्टहासं**
**दिशो विनेदुर्न्यपतंश्च गर्भाः॥१४॥**

जिनके प्रचण्ड अट्टहास करने पर सब दिशाएं गूंज उठी थीं और गर्भवती दैत्य-पत्नियों के गर्भ गिर गए थे, वे दैत्य यूथपतियों के परम् शत्रु भगवान् 'नृसिंह' किले, जंगल, युद्धभूमि आदि दुर्गम स्थानों में मेरी रक्षा करें॥१४॥

**रक्षत्वसौ माध्वनि यज्ञकल्पः**
**स्वदंष्ट्रयोन्नीतधरो वराहः।**
**रामोऽद्रिकूटेष्वथ विप्रवासे**
**सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान्॥१५॥**

अपनी दाढ़ों से पृथ्वी को उठा लेने वाले यज्ञमूर्ति 'वराह' भगवान् मार्ग में, 'परशुराम जी' पर्वतों के शिखरों

र और लक्ष्मण जी के सहित भरत के बड़े भाई भगवान् 'रामचन्द्र जी' प्रवास के समय मेरी रक्षा करें।।१५।।

**मामुग्रधर्मादखिलात् प्रमादा-**
**न्नारायण: पातु नरश्च हासात्।**
**दत्तस्त्वयोगादथ योगनाथ:**
**पायाद् गुणेश: कपिल: कर्मबन्धनात्।।१६।।**

भगवान 'नारायण' मारण-मोहन आदि भयंकर अभिचारों एवं तांत्रिक क्रियाओं और सब प्रकार के प्रमादों से मेरी रक्षा करें। 'ऋषि श्रेष्ठ' नरक से, योगेश्वर भगवान 'दत्तात्रेय' योग के विघ्नों से और त्रिगुणाधिपति भगवान् 'कपिल' कर्मबन्धनों से मेरी रक्षा करें।।१६।।

**सनत्कुमारोऽवतु कामदेवा-**
**द्धयशीर्षा मां पथि देवहेलनात्।**
**देवर्षिवर्य: पुरुषार्चनान्तरात्**
**कूर्मो हरिर्मां निरयादशेषात्।।१७।।**

परमर्षि सनतकुमार कामदेव से, हयग्रीव भगवान मार्ग में चलते समय देव-मूर्तियों को नमस्कार आदि न

करने के अपराध से, देवर्षि नारद सेवापराधों से और भगवान कच्छप सब प्रकार के नरकों से मेरी रक्षा करें।।१७।।

**धन्वन्तरिर्भगवान् पात्वपथ्याद्**
**द्वन्द्वाद् भयादृषभो निर्जितात्मा।**
**यज्ञश्च लोकादेवताज्जानान्ताद्**
**बलो गणात् क्रोधवशादहीन्द्रः।।१८।।**

भगवान धन्वन्तरि कुपथ्य से, जितेन्द्रिय भगवान ऋषभदेव सुख-दुःख आदि भंयकर द्वन्द्वों से, यज्ञ भगवान लोकोपवाद से, बलराम जी मनुष्यकृत कष्टों से और शेषनाग जी के क्रोधवश-नामक सर्पों के गण से मेरी रक्षा करें।।१८।।

**द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु**
**पाखण्डगणात् प्रमादात्।**
**कल्कि: कले: कालमलात्**
**प्रपातु धर्मावनायोरुकृतावतार:।।१९।।**

भगवान श्री कृष्ण द्वैपायन व्यास जी अज्ञान से तथा बुद्धदेव पाखण्डियों से और झूठ बोलने वालों से मेरी रक्षा करें। धर्म-रक्षा के लिए महान अवतार धारण करने वाले

भगवान कल्कि पापबहुल कलिकाल के दोषों से मेरी रक्षा करें।।१९।।

**मां केशवो गदया प्रातरव्याद्**
**गोविन्द आसङ्गवमात्तवेणुः।**
**नारायणः प्राह्ण उदात्तशक्ति-**
**र्मध्यंदिने विष्णुररीन्द्रपाणिः।।२०।।**

प्रातःकाल भगवान केशव अपनी गदा लेकर, थोड़ा-सा दिन चढ़ जाने पर भगवान गोविन्द अपनी बांसुरी लेकर, दोपहर के पहले भगवान नारायण अपनी तीक्ष्ण शक्ति लेकर और दोपहर को भगवान विष्णु चक्रराज सुदर्शन लेकर मेरी रक्षा करें।।२०।।

**देवोऽपराह्णे मधुहोग्रधन्वा सायं**
**त्रिधामावतु माधवो माम्।**
**दोषी हृषीकेश उतार्धरात्रे**
**निशीथ एकोऽवतु पद्मनाभः।।२१।।**

तीसरे पहर में भगवान मधुसूदन अपना प्रचण्ड धनुष लेकर मेरी रक्षा करें। सांयकाल में ब्रह्मा आदि त्रिमूर्ति धारी

माधव, सूर्यास्त के बाद हृषीकेश, अर्धरात्रि के पूर्व तथा अर्धरात्रि के समय अकेले भगवान पद्मनाभ मेरी रक्षा करें।।२१।।

**श्रीवत्सधामापररात्र ईशः**
**प्रत्यूष ईशोऽसिधरो जनार्दनः।**
**दामोदरोऽव्यादनुसंध्यं प्रभाते**
**विश्वेश्वरो भगवान् कालमूर्तिः।।२२।।**

रात्रि के पिछले पहर में श्रीवत्सलाञ्छल श्रीहरि, उषाकाल में खड्गधारी भगवान जनार्दन, सूर्योदय से पूर्व श्रीदामोदरं और सम्पूर्ण संध्याओं में कालमूर्ति भगवान विश्वेश्वर मेरी रक्षा करें।।२२।।

**चक्रं युगान्तानलतिग्मनेमि**
**भ्रमत् समन्ताद् भगवत्प्रयुक्तम्।**
**दंदग्धि दंदग्ध्यरिसैन्यमाशु**
**कक्षं यथा वातसखो हुताशः।।२३।।**

हे सुदर्शन! आपका चक्र (रथ के पहिये) की तरह है। आपके किनारे का भाग प्रलयकालीन अग्नि के समान

अत्यन्त तीव्र है। आप भगवान की प्रेरणा पाकर सब ओर घूमते रहते हैं। जैसे अग्नि वायु की सहायता पाकर सूखे घास-फूस को जला डालती है, वैसे ही आप हमारी शत्रु सेना को अतिशीघ्र जला दीजिये, जला दीजिये।।२३।।

**गदेऽशनिस्पर्शनविस्फुलिंगे**
**निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि।**
**कूष्माण्डवैनायकयक्षरक्षो-**
**भूतग्रहांश्चूर्णय चूर्णयारीन्।।२४।।**

कौमेद की गदा! आपसे निकलने वाली चिंगारियों का स्पर्श वज्र के समान असह्य है। आप भगवान अजित की प्रिया हैं और मैं उनका सेवक (दास) हूं। इसलिए आप कूष्माण्ड, विनायक, यक्ष, राक्षस, भूत और प्रेतादि ग्रहों को अभी पीस डालिये, पीस डालिये तथा मेरे शत्रुओं को चूर-चूर कर दीजिये।।२४।।

**त्वं यातुधानप्रमथप्रेतमातृ-**
**पिशाचविप्रग्रहघोरदृष्टीन्।**

**दरेन्द्र विद्रावय कृष्णपूरितो**
**भीमस्वनोऽरेर्हृदयानि कम्पयन्॥२५॥**

शंखश्रेष्ठ! आप भगवान श्री कृष्ण के फूंकने से भयंकर शब्द करके मेरे शत्रुओं का दिल दहला दीजिये एवं यातुधान, प्रमथ, प्रेत, मातृका, पिशाच तथा ब्रह्मराक्षस आदि भयानक प्राणियों को यहां मेरी नजरों से दूर कर दीजिए॥२५॥

**त्वं तिंग्मधारासिवरारिसैन्य-**
**मीशप्रयुक्तो मम छिन्धि छिन्धि।**
**चक्षूँषि चर्मञ्छतचन्द्र छादय**
**द्विषामघोनां हर पापचक्षुषाम्॥२६॥**

भगवान की श्रेष्ठ तलवार! आपकी धार अत्यन्त तीक्ष्ण है। आप भगवान की प्रेरणा पाकर मेरे शत्रुओं को छिन्न-भिन्न कर दीजिये। भगवान की प्यारी ढाल! आप में सैंकड़ों चन्द्राकार मण्डल हैं। आप पाप दृष्टि पापात्मा शत्रुओं की आंखों की रोशनी छीनकर उन्हें सदा के लिए अन्धा बना दीजिए॥२६॥

**यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च।**
**सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा॥२७॥**
**सर्वाण्येतानि भगवान्नामरूपास्त्रकीर्तनात्।**
**प्रयान्तु संक्षयं सद्यो ये नः श्रेयः प्रतीपकाः॥२८॥**

सूर्य आदि ग्रह, धूमकेतु (पुच्छल तारे) आदि, केतु, दुष्ट मनुष्य, सर्पादि रेंगने वाले जन्तु, दाढ़ों वाले हिंसक पशु, भूत-प्रेत आदि तथा पापी प्राणियों से हमें जो-जो भय हो और जो-जो हमारे मंगल में बाधक हों-वे सभी भगवान के नाम, रूप तथा आयुधों (शस्त्रों) का कीर्तन करने के प्रताप से तत्काल नष्ट हो जाएं॥२७-२८॥

**गरुडो भगवान् स्तोत्रस्तोभश्छन्दोमयः प्रभुः।**
**रक्षत्वशेषकृच्छ्रेभ्यो विषवक्सेनः स्वनामभिः॥२९॥**

बाहद, रथन्तर आदि सामवेदीय स्तोत्रों से जिनकी स्तुति की जाती है, वे वेदमूर्ति भगवान गरुड़ और विषवक्सेनजी अपने नामोच्चारण के प्रभाव से सब प्रकार की विपत्तियों और कष्टों से हमारी रक्षा करें॥२-९॥

**सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः।**
**बुद्धीन्द्रियमनः प्राणान् पान्तु पार्षदभूषणाः॥३०॥**

श्रीहरि के नाम, रूप, वाहन, आयुध (शस्त्र) और श्रेष्ठ पार्षद हमारी बुद्धि, इन्द्रिय, मन और प्राणों को सब कार की विपत्तियों और कष्टों से बचाएं॥३०॥

**यथा हि भगवानेव वस्तुतः सदसच्च यत्।**
**सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः॥३१॥**

जितना भी कार्य अथवा कारण रूप जगत है, वह वास्तव में भगवान ही हैं-इस सत्य के प्रभाव से हमारे सारे उपद्रव शीघ्र नष्ट हो जाएं॥३१॥

**यथैकात्म्यानुभावानां विकल्परहितः स्वयम्।**
**भूषणायुधलिंगाख्या धत्ते शक्तिः स्वमायमा॥३२॥**
**तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः।**
**पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः॥३३॥**

जो व्यक्ति ब्रह्म और आत्मा की एकता का अनुभव ... नुके हैं, उनकी दृष्टि में भगवान का स्वरूप समस्त

विकल्पों-भेदों से रहित हैं, फिर भी वे अपनी माया-शक्ति के द्वारा भूषण, आयुध और रूप नामक शक्तियों को धारण करते हैं। यह बात वास्तविक रूप से सत्य है। इस कारण सर्वज्ञ, सर्वव्यापक भगवान श्रीहरि सदा-सर्वत्र सब स्वरूपों से हमारी सब ओर से रक्षा करें।।३२-३३।।

**विदिक्षु दिक्षूर्ध्वमधः समन्तादन्त-**
**बहिर्भगवान् नारसिंहः।**
**प्रहापयंल्लोकभयं स्वनेन**
**स्वतेजसा ग्रस्तसमस्ततेजाः।।३४।।**

जो अपने प्रचण्ड अट्टहास से सब लोकों के भय को भगा देते हैं और अपने तेज से सबका तेज ग्रस लेते हैं, वे भगवान नृसिंह दिशा-विदिशा में, ऊपर-नीचे, बाहर-भीतर सब ओर से हमारी रक्षा करें।।३४।।

**मघवन्निदमाख्यातं वर्म नारायणात्मकम्।**
**विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान्।।३५।।**

हे देवराज इन्द्र! मैंने तुम्हें यह नारायण कवच सुना

दिया। इस कवच से तुम अपने को सुरक्षित कर लो। फिर तुम अनायास ही सब दैत्य-यूथपतियों को जीत लोगे।।३५।।

**एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा।**
**पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते।।३६।।**

इस नारायण कवच को धारण करने वाला पुरुष जिसको अपने नेत्रों से देख लेता है अथवा पैर से छू देता है, वह उसी क्षण सभी भयों से मुक्त हो जाता है।।३६।।

**न कुतश्चिद् भयं तस्य**
**विद्यां धारयतो भवेत्।**
**राजदस्युग्रहादिभ्यो व्याघ्रा-**
**दिभ्यश्च कर्हिचित्।।३७।।**

जो इस वैष्णवी विद्या को धारण कर लेता है, उसे राजा, दस्यु (डाकू), प्रेत-पिशाचादि और बाघ (शेर) आदि हिंसक जीवों से कभी किसी प्रकार का कोई भय नहीं होता।३७।।

**इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः।**
**योगधारणया स्वांग जहौ स मरुधन्वनि।।३८।।**

हे देवराज! प्राचीनकाल की बात है, एक कौशिक गोत्रीय ब्राह्मण ने इस विद्या को धारण करके योगधारणा से अपना शरीर मरुभूमि में त्याग दिया।।३८।।

**तस्योपरि विमानेन गन्धर्वपतिरेकदा।**
**ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः।।३९।।**

जहां उस ब्राह्मण का शरीर पड़ा था, उसके ऊपर से एक दिन गंधर्वराज चित्ररथ अपनी पत्नियों के साथ विमान में बैठकर निकले।।३-९।।

**गगनान्यपतत् सद्यः सविमानो ह्यवाक्शिराः।**
**स बालखिल्यवचनादस्थीन्यादाय विस्मितः।**
**प्रास्य प्राचीसरस्वत्यां स्नात्वा।**
**धाम स्वमन्वगात् ।।४०।।**

वहां आते ही वे सभी नीचे की ओर विमान सहित आकाश से पृथ्वी पर गिर पड़े। इस घटना से वह सभी आश्चर्यचकित हो गये। जब उन्हें बालखिल्य मुनियों ने बताया कि यह नारायण कवच धारण करने का प्रभाव है, तब उन्होंने उस ब्राह्मण देवता की हड्डियों को ले जाकर प्राचीन सरस्वती नदी में प्रवाहित कर दिया और फिर स्नान

